श्री भद्र । भद्राम्बिकाप्राणनाथा । सुरारातिभङ्गा । प्रभो ।
रुद्र । रौद्रावतारा । सुनासीर मुख्यामरानेक सम्भावितानल्प
सुश्लोकचारित्र । कोट्यर्कसङ्काश देदीप्यमानप्रभा । दिव्यगात्रा
शिवा । पालिताशेषब्रह्माण्डभाण्डोदरा । मेरुधीरा । विराड्रूप ।
वाराशिगम्भीर । सौजन्यरत्नाकरा । वारिदश्याम । नारायणध्येय
मौनीन्द्रचित्ताब्जभृङ्गा । सुरारातिभङ्गा । महोदार ।
भक्तौघकल्पद्रुमा । शिष्टरक्षा । प्रशस्तप्रतापोज्ज्वला ।
श्रीकरा । भीकरा । भीकरालोक । चूर्णीकृतार्येषु दोर्दण्ड पाण्डित्य
संरम्भणोल्लास । राजत्कराम्भोज विन्यस्त खड्गत्रिशूलादिनानायुधा ।
भण्डनाचार्य । रुद्राक्षमालालसद्देह । रत्नाञ्चितानर्घ सौवर्ण
केयूर भास्वत् किरीटोत्तमाङ्गा । त्रिपुण्ड्राङ्क सर्वाङ्गसंशोभिता
चन्द्रकोटीर । हेमाम्बराडम्बरा । दैवचूडामणी । सन्तताखण्ड ।
दीर्घायुरारोग्यसौभाग्यसिद्धिप्रदा । देव । तापत्रयध्वान्तभानू ।
वियत्केश । मृत्युञ्जया । दीनचिन्तामणी । सर्वलोकेश । लोकात्म ।
लोकस्वरूपा । महायज्ञविध्वंसनाध्यक्ष । दाक्षायणीपुत्र ।
अक्षीणपुण्या । विभो । वीरभद्रा । महाकालरुद्रा । कृपामुद्र ।
मां पाहि दीनबन्धो । दयावारिराशी । लसच्चित्रभूषा ।
महादिव्यवेषा । हरा । भक्तपोषा । दयावार्धि । वीरेश्वरा ।
नित्यकल्याणसन्धानधौरेय । पापाटवी कील दावानला ।
पुण्यमूर्ते । नमस्ते नमस्ते नमस्ते नमः ॥

इति श्रीवीरभद्रदण्डकं सम्पूर्णम् ।

Encoded and proofread by
Malleswara Rao Yellapragada malleswararaoy at yahoo.com

---

.. shrI vIrabhadra daNDakam 1 ..

Searchable pdf was typeset using generateactualtext feature of XeLaTeX 0.99996

on September 11, 2017

